# शिवसूत्र

चैतन्यमात्मा १ ज्ञानं बन्धः २ योनिवर्गः कलाशरीरम् ३ ज्ञानाधिष्ठानं मातृका ४ उद्यमो भैरवः ५ शक्तिचक्रसंधाने विश्वसंहारः ६ जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः ७ ज्ञानं जाग्रत् ८ स्वप्नो विकल्पाः ९ अविवेका मायासौषुप्तम् १० त्रितयभोक्ता वीरेशः ११ विस्मयो योगभूमिकाः १२ इच्छा शक्तिरुमा कुमारी १३ दृश्यं शरीरम् १४ हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम् १५ शुद्धतत्त्वसंधानाद्वाऽपशुशक्तिः १६ वितर्क आत्मज्ञानम् १७ लोकानन्दः समाधिसुखम् १८ शक्तिसन्धाने शरीरोत्पत्तिः १९ भूतसंधानभूतपृथक्त्वविश्वसंघट्टाः २० शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः २१ महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः २२ इति प्रथम उन्मेषः

चित्तं मन्त्रः १ प्रयत्नः साधकः २ विद्याशरीरसत्ता मन्त्ररहस्यम् ३ गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः ४ विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ५ गुरुरुपायः ६ मातृकाचक्रसम्बोधः ७ शरीरं हविः ८ ज्ञानमन्नम् ९ विद्यासंहारे तदुत्थस्वप्नदर्शनम् १० इति द्वितीय उन्मेषः

आत्मा चित्तम् १ ज्ञानं बन्धः २ कलादीनां तत्त्वानामविवेको माया ३ शरीरे संहारः कलानाम् ४ नाडीसंहारभूतजयभूतकैवल्यभूतपृथक्त्वानि ५ मोहावरणात्सिद्धिः ६ मोहजयादनन्ताभोगात्सहजविद्याजयः ७ जाग्र-द्द्वितीयकरः ८ नर्तक आत्मा ९ रङ्गोऽन्तरात्मा १० प्रेक्षकाणीन्द्रियाणि ११ धीवशात्सत्त्वसिद्धिः १२ सिद्धः स्वतन्त्रभावः १३ यथा तत्र तथान्यत्र १४ बीजावधानम् १५ आसनस्थः सुखं ह्रदे निमज्जति १६ स्वमात्रानिर्माणमापादयति १७ विद्याऽविनाशे जन्मविनाशः १८ कवर्गादिषु माहेश्वर्याद्याः पशुमातरः १९ त्रिषु चतुर्थं तैलवदासेच्यम् २० मग्नः स्वचित्तेन प्रविशेत् २१ प्राणसमाचारे समदर्शनम् २२ मध्येऽवरप्रसवः २३ मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् २४ शिवतुल्यो जायते २५ शरीरवृत्तिर्व्रतम् २६ कथा जपः २७ दानमात्मज्ञानम् २८ योऽविपस्थो ज्ञाहेतुश्च २९ स्वशक्तिप्रचयोऽस्य विश्वम् ३० स्थितिलयौ ३१ तत्प्रवृत्ता-वप्यनिरासः संवेत्तृभावात् ३२ सुखदुःखयोर्बहिर्मननम् ३३ तद्विमुक्तस्तु केवली ३४ मोहप्रतिसंहतस्तु कर्मात्मा ३५ भेदतिरस्कारे सर्गान्तरकर्मत्वम्

३६ करणशक्तिः स्वतोऽनुभवात् ३७ त्रिपदाद्यनुप्राणनम् ३८ चित्तस्थितिवच्छरीरकरणबाह्येषु ३९ अभिलाषाद्बहिर्गतिः संवाह्यस्य ४० तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः ४१ भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः ४२ नैसर्गिकः प्राणसंबन्धः ४३ नासिकान्तर्मध्यसंयमात्किमत्र सव्यापसव्यसौषुम्नेषु ४४ भूयः स्यात्प्रतिमीलनम् ४५ इति तृतीय उन्मेषः